हयग्रीवोपनिषत्

स्वज्ञोऽपि यत्प्रसादेन ज्ञानं तत्फलमाप्नुयात् ।
सोऽयं हयास्यो भगवान्हृदि मे भातु सर्वदा ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः ।
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः ।
व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ नारदो ब्रह्माणमुपसमेत्योवाचाधीहि भगवन्
ब्रह्मविद्यां वरिष्ठां यया चिरात्सर्वपापं व्यपोह्य
ब्रह्मविद्यां लब्ध्वैश्वर्यवान्भवति । ब्रह्मोवाच
हयग्रीवदैवत्यान्मन्त्रान्यो वेद स श्रुतिस्मृतीतिहासपुराणानि वेद ।
स सर्वैश्वर्यवान्भवति । त एते मन्त्राः ।
विश्वोत्तीर्णस्वरूपाय चिन्मयानन्दरूपिणे ।
तुभ्यं नमो हयग्रीव विद्याराजाय स्वाहा स्वाहा नमः ॥ १॥

ऋग्यजुःसामरूपाय वेदाहरणकर्मणे ।
प्रणवोद्गीथवपुषे महाश्वशिरसे नमः स्वाहा स्वाहा नमः ॥ २॥

उद्गीथ प्रणवोद्गीथ सर्ववागीश्वरेश्वर ।
सर्ववेदमयाचिन्त्य सर्वं बोधय बोधय स्वाहा स्वाहा नमः ॥ ३॥

ब्रह्मात्रिरविसवितृभार्गवा ऋषयः । गायत्रीत्रिष्टुबनुष्टुप् छन्दांसि ।

श्रीमान् हयग्रीवः परमात्मा देवतेति । ह्लौ(ह्सौ)मिति बीजम् ।
सोऽहमिति शक्तिः । ह्लू(ह्सौ)मिति कीलकम् । भोगमोक्षयोर्विनियोगः ।
अकारोकारमकारैरङ्गन्यासः । ध्यानम् ।
शङ्खचक्रमहामुद्रापुस्तकाढ्यं चतुर्भुजम् ।
सम्पूर्णचन्द्रसंकाशं हयग्रीवमुपास्महे ॥

ॐ श्रीमिति द्वे अक्षरे । ह्लौ(ह्सौ)मित्येकाक्षरम् । ॐ नमो
भगवत इति सप्ताक्षराणि । हयग्रीवायेति पञ्चाक्षराणि ।
विष्णव इति त्र्यक्षराणि । मह्यं मेधां प्रज्ञामिति
षडक्षराणि , प्रयच्छ स्वाहेति पञ्चाक्षराणि ।
हयग्रीवस्य तुरीयो भवति ॥ ४॥

ॐ श्रीमिति द्वे अक्षरे । ह्लौ(ह्सौ)मित्येकाक्षरम् । ऐमैमैमिति
त्रीण्यक्षराणि । क्लीं क्लीमिति द्वे अक्षरे । सौः सौरिति द्वे अक्षरे ।
ह्रीमित्येकाक्षरम् । ॐ नमो भगवत इति सप्ताक्षराणि ।
मह्यं मेधां प्रज्ञामिति षडक्षराणि । प्रयच्छ
स्वाहेति पञ्चाक्षराणि । पञ्चमो मनुर्भवति ॥ ५॥

इति हयग्रीवोपनिषत्सु प्रथमोपनिषत् ॥ १ ॥

हयग्रीवैकाक्षरेण ब्रह्मविद्यां प्रवक्ष्यामि । ब्रह्मा
महेश्वराय महेश्वरः संकर्षणाय संकर्षणो नारदाय
नारदो व्यासाय व्यासो लोकेभ्यः प्रायच्छदिति
हकारोंसकारोमकारों त्रयमेकस्वरूपं भवति । ह्लौं(ह्सौं)
बीजाक्षरं भवति । बीजाक्षरेण ह्लौं(ह्सौं) रूपेण तज्जापकानां
सम्पत्सारस्वतौ भवतः । तत्स्वरूपज्ञानां वैदेही
मुक्तिश्च भवति । दिक्पालानां राज्ञां नागानां
किन्नराणामधिपतिर्भवति । हयग्रीवैकाक्षरजपशीलाज्ञया
सूर्यादयः स्वतः स्वस्वकर्मणि प्रवर्तन्ते । सर्वेषां

बीजानां हयग्रीवैकाक्षरबीजमनुत्तमं मन्त्रराजात्मकं भवति । ह्लौं(ह्सौं) हयग्रीवस्वरूपो भवति । अमृतं कुरु कुरु स्वाहा । तज्जापकानां वाक्सिद्धिः श्रीसिद्धिरष्टाङ्गयोगसिद्धिश्च भवति । ह्लौं(ह्सौं) सकलसाम्राज्येन सिद्धिं कुरु कुरु स्वाहा । तानेतान्मन्त्रान्यो वेद अपवित्रः पवित्रो भवति । अब्रह्मचारी सुब्रह्मचारी भवति । अगम्यागमनात्पूतो भवति । पतितसम्भाषणात्पूतो भवति । ब्रह्महत्यादिपातकैर्मुक्तो भवति । गृहं ॠहपतिरिव देही देहान्ते परमात्मानं प्रविशति । प्रज्ञानमानन्दं ब्रह्म तत्त्वमसि अयमात्मा ब्रह्म अहं ब्रह्मास्मीति महावाक्यैः प्रतिपादितमर्थं त एते मन्त्राः प्रतिपादयन्ति । स्वरव्यञ्जनभेदेन द्विधा एते । अथानुमन्त्राञ्जपति ।

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥ १॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ २॥

ओष्ठापिधाना नकुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारु मामिह वादयेति च वाग्रसः ॥ ३॥

ससर्परीरमतिं बाधमान बृहन्मिमाय जमदग्निदत्त ।
आसूर्यस्य दुरिता तनान श्रवो देवेष्वमृतमजुर्यम् ॥ ४॥

य इमां ब्रह्मविद्यामेकादश्यां पठेद्धयग्रीवप्रभावेन महापुरुषो भवति । स जीवन्मुक्तो भवति । ॐ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ओमित्युपनिषत् ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिर्व्यशेम देवहितं यदायुः ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति हयग्रीवोपनिषत्समाप्ता ॥